॥श्रीगणेशायनमः॥शाब्देब्रह्मणिनिष्णातःपरंब्रह्माधिगच्छति॥इतिवात्सल्यवान्विभ्रन्तद्रूपंपातुमाधवः॥१॥कोलाहलोऽत्रकुधि
यांनप्रत्यूहोविवेकिनाम्॥कलिदोषोरमानाथदासमीष्टनवीक्षितुम्॥२॥आख्यातस्यकृतौशक्तिर्नतुकर्तरिकृत्याश्रयत्वमेवहिकर्तृ
त्वंनत्वकृतिरूपमित्यनंतकृतीनांशक्यतावच्छेदकत्वेगौरवादितितार्किकाः॥नचैवंरथोगच्छतीत्यादावचेतनेरथेकृतेर्बाधादाश्रयत्वा
दौलक्षणायांलक्ष्यतावच्छेदकगौरवेणसाम्यमितिवाच्यम्॥अतिरिक्तशक्तिकल्पनापेक्षयाक्लृप्तायांशक्तिसंबंधरूपलक्षणायांगौरवाभा
वात् ननुलक्षणाश्रयणेकथंवर्तमानत्वादीनामन्वयः।युगपद्वृत्तिद्वयाऽनभ्युपगमादितिचेन्न।शक्ततावच्छेदकलक्ष्यतावच्छेदकयोर्भेदात्॥
लट्त्वेनहिवर्तमानत्वेशक्तिः।लकारत्वेनलक्षणेति।अतएवसकृदुच्चरितइतिन्यायात्कथंकृतिवर्तमानत्वयोर्युगपद्बोधइत्यपिनाशंक्यम्
लकारत्वलट्स्वरूपशक्ततावच्छेदकभेदात् ननुतथापिलक्षणाज्ञानजन्याऽश्रयत्वाद्युपस्थितेर्युगपत्हेतुत्वकल्पनेगौरवमितिचेन्न तद्विष
यकशाब्दबोधंप्रतितद्विषयकवृत्तिज्ञानजन्योपस्थितित्वेनैवहेतुतयांलक्षणाज्ञानस्यपृथक्हेतुत्वाऽभावात् घटपदात्समवायेना
काशस्मरणेतच्छाब्दबोधवारणायवृत्तिज्ञानेतिविशेषणम्।अथैवमनकूलत्वादीनांसंसर्गाणांशाब्दबोधविषयत्वंदुर्लभमिति
चेन्न घटपदादुपस्थितस्यघटत्वस्यविशेष्यतयान्वयवारणायतत्धर्मप्रकारकतद्विशेष्यकशाब्दबोधंप्रतितत्धर्मप्रकारकत(
द्विशेष्यकवृत्तिज्ञानजन्योपस्थितेर्हेतुत्वावश्यकतयासंसर्गस्यतत्धर्मप्रकारकत्वाभावेनादोषात् स्यादेतत् वृत्त्यनुपस्थि

तस्यापि ससर्गस्य शाब्दबोधविषयत्वे राजपुरुष इत्यादौ यावत्संबंधभानापत्तिः जन्यजनकभावादेरपि संभवादिति चेन्न तात्प
र्यस्य नियामकत्वात् अत्रेदमवधेयं आख्यातस्य कर्तृवाचकत्वाभावे पच्यते तंडुलेनेत्यादौ कर्मवत्कर्मणा तुल्यक्रिय इत्यतिदे
शात्कर्मणि द्वितीयापत्तिः वैय्याकरणानां तु लिङ्गाशिष्यङिति हि लकारका इत्यनुवृत्तेर्लकारवाच्यः कर्ता कर्मवदित्यर्थान्ना
तिप्रसंगः॥ भावे लकारे च लकारेण कर्तुरनुपस्थितेः एवं भेत्तव्यं कुसूलेनेत्यत्रापि कर्मवत्कर्मणेति कर्मवद्भावाद्भावे प्रत्ययाना
पत्तिः अस्मन्मते च लकारवाच्यस्यैव कर्तुः कर्मवद्भावात्कृतिकर्तुः कर्मवत्त्वाभावेनोक्तदोषाभावः न च लकारवाच्य कृ
त्याश्रयः कर्ता कर्मवदित्यर्थान्निस्तारः शंक्यः लकारस्य तत्र विक्लृत्याश्रयवाचकत्वेन कृतिवाचकत्वाभावात् तदाश्रयत्व
स्याप्यसंभवाच्च न च लकारार्थसंख्याश्रयः कर्म कर्ता कर्मवदित्यर्थ इति वाच्यम् पच्यमानस्तंडुल इत्यादौ लकारेण संख्याया अ
नुपस्थित्या कर्मवद्भावानापत्तेः अत एव लकारार्थकर्तृत्वाश्रयः कर्ता कर्मवदित्यर्थेऽप्यत्र न निर्वाहः वाचनिकातिरिक्तवचनारंभस्यै
व गुरुत्वात् किंच लक्षणायाः शक्यानुसंधानपूर्वकत्वाल्लक्षणायां लाघवं निर्युक्तिकमेव अत एव निषादस्थपतिं याजयेदित्यत्र निषाद
श्चासौ स्थपतिश्चेति कर्मधारयो न तु निषादानां स्थपतिरिति तत्पुरुषः॥ ॥ पूर्वपदे लक्षणाप्रसंगादिति सकलसिद्धांतः अत एव
राजपुरोहितौ स्वाराज्यकामौ यजेतामित्यत्र राजा च पुरोहितश्चेति द्वंद्वो न तु राज्ञः पुरोहिताविति तत्पुरुषो लक्षणाप्रसंगादिति सर्वसिद्धां

तः अतएवोद्भिदा यजेत पशुकाम इत्यत्रोद्भिच्छब्दः कर्मनामधेयमुद्भिच्छब्देन खनित्रादिकं गृहीत्वोद्भिद्वता यागेनेत्यर्थाश्रयणे
तुमत्वर्थलक्षणापत्तिरिति उद्भिदधिकरणं संगच्छते वस्तुतस्तु फलव्यापारयोरुभयोर्धातुलभ्यत्वादखंडशक्तिरूपमाश्रयत्वमेवाख्या
तशक्यतावच्छेदकमिति न गौरवसंभवना तार्किकपरिभाषाया यत्नत्वस्येव शाब्दिकपरिभाषया आश्रयत्वस्याप्यतिरिक्तत्वे बाधकाभावा
त् कुमारीभार्य इत्यादौ जातेश्चेति पुंवद्भावप्रतिषेधसिध्यर्थं कौमारादीनामपि जातित्वमभ्युपगच्छतां भाष्यकारादीनां नित्यैव जाति रि
ति नियमात् अतएव दीधितिकृतापि सिद्धांतलक्षणे ऽधिकरणत्वादीनामतिरिक्तत्वं स्वीकृतं तस्य हि अधिकरणस्वरूपत्वे आधेयस्वरू
पत्वे वा परस्परासंयुक्तघटभूतलसत्वे पीदानीं भूतले घटवदिति प्रत्ययप्रसंग इति विस्तरस्तत्रैव किं चाश्रयत्वं नित्यमेवास्तु उत्पादविना
शव्यवहारस्तु निरूपितत्वाद्युत्पत्यादिकमादायैवास्तु वायुत्वरूपयोः समवायस्यैकत्वेपि रूपनिरूपितत्वाभावेन वायौ रूपवत्ताप्रतीत्य
भाववत् किंच लकारस्य यत्नार्थत्वे पचंतं चैत्रं पश्येत्यादावपि यत्नमात्रबोधापत्तिः तथा चानन्वयः न हि तत्र यत्नस्याश्रयतासंबंधेना
न्वयः संभवति नामार्थयोरभेद इति नियमात् न च तत्र शत्रादीनां कर्तरि शक्तिः शक्यास्थानिनामेव तार्किकमते वाचकत्वात् स्थान्य
र्थेन निराकांक्षतया कर्तरि कृदित्यस्य तत्रानुपस्थितेः अन्यथा पच्यमान इत्यत्रापि तदापत्तेः अथ पचंतमित्यादौ लकारस्य कर्तरि लक्ष
णेति चेत्सत्यं पाकपदादीनां तद्वति लक्षणया पाको देवदत्त इत्यादेरप्यापत्तेः किंच लाक्षणिकं नानुभावकं लाक्षणिकार्थस्य बोधपदांतर

समभिव्याहारःकारणमितितार्किकसिद्धांतात्स्वादिसमभिव्याहारस्य तादृशबोधंप्रतिहेतुत्वकल्पने पचमानः पच्यमान इत्यनयोर्वैल
क्षण्यानापत्तिः परंतु किं करोतीत्यत्र किंविषयको यत्न इत्येवं यत्नार्थककरोतिना प्रश्ने पचतीत्युत्तरदर्शनादाख्यातस्य यत्नार्थत्वमितित
त्रकृञो यत्नार्थत्वे यतिवदकर्मकत्वापत्तेः किंच यत्नमात्रार्थत्वे क्रियते घटः स्वयमेवेत्यादौ कर्मवद्भावानापत्तेोय गाद्यनापत्तेः कर्मावस्था
यां या क्रिया सा कर्त्रवस्थायां चेत्तदैव कर्मवत्कर्मणा तुल्यक्रिय इत्यस्य प्रवृत्तेः कृतिश्च न घटादिनिष्ठा प्रश्नवाक्ये यत्नविशिष्टजिज्ञा
सित संबंध उत्तरे त्वाश्रयत्वादिविशिष्ट इति वैषम्यात् एतेन पचति पाकं करोतीति यत्नार्थककरोतिना विवरणादाख्यातस्य यत्ना
र्थ इत्यपास्तं उक्तरीत्या कृञो यत्नार्थत्वाभावात् किंचाचेतने स्वरसतः कर्तृपदप्रयोगाभावात्कृञो यत्नार्थत्वमित्येव भवतामाग्रहः सर
चापार्थः बीजादीनांकुरः कृतो रथो गमनं करोतीत्यचेतनेपि कृञः प्रयोगात् अत एव भवतामचेतने कर्तृपदप्रयोगः अत एव पचतीत्युक्ते कः
किंजातीय इति कर्तृविषयकप्रश्नानुभवः सार्वजनीनः किंच लः कर्मणि चेति सूत्रे कर्तृशब्दस्य कर्तृत्वपरतया कर्तृत्वं कृतिरेवेति तद्विरोध
परिहारे कर्तरि कृदित्यत्रापि कृत्यर्थत्वापत्तेः तत एव कर्तरीत्यस्यानुवृत्तेः शब्दाधिकाराश्रयणेपि क्लेश एव अथ तत्र नामार्थयोरभेद इति
नियमात् कर्तृवाचित्वमिति चेत् पचन् चैत्र इत्यादावपि लकारस्य कर्तृवाचकत्वापत्तिः अभेदस्योभयत्र तुल्यत्वात् कीदृशोऽत्र नियमः ॥
नामार्थयोरभेद एवेति अभेदो नामार्थयोरेवेति आद्ये राज्ञः सुतस्य धनमित्यादौ व्यभिचारः द्वितीये तु स्तोकं पचतीत्यत्र ननु नामार्थधा

वा०र० त्वर्थयोर्नामार्थयोश्च साक्षाद्भेदान्वयो नेत्येव नियमः राज्ञः सुतस्येत्यादौ विभक्त्यर्थसंबंधद्वारान्वयो न स्यात् राजपुरुष इत्यत्र तु राजपदस्य
२ राजसंबंधिनि लक्षणयाऽभेद एव॥ प्राप्तोदकादावप्युदकपदस्योदककर्तृकप्राप्तिकर्मणि लक्षणा उपकुंभमित्यादौ कुंभादिपदस्य कुंभा
दिसमीपादौ धवखदिरावित्यादौ तु द्वयोरपि प्रधानत्वेन परस्परं संबंधाभावादेवं तर्हि पचति कल्पमित्यादावुक्तव्युत्पत्तिबलादेव
कर्त्रर्थोऽस्तु न च तत्र नाम्नः समुदायस्यार्थ एव नास्तीति शक्यं। पाचक इत्यादावपि तन्मते समुदायार्थविरहात् तस्मान्नामजन्य
बोधविषयत्वमेव नामार्थत्वं किं च कर्तुरवाच्यत्वे पचति चैत्र इत्यादौ कर्तुरनभिधानात्तृतीयापत्तिः अथायमाशयः अभिहित
संख्याके कर्तरि तृतीया तद्यथा कर्तृकरणयोर्हैकयोरित्यादौ नामैकवाक्यतयाऽनभिहिते कर्तृगतैकत्वे इत्यर्थ इति चेदेवं तर्हि कृष्ट
पच्या व्रीहय इत्यत्र कर्मकर्तरि कर्तृसंख्याभिधानाभावात्तृतीयापत्तिः पाचको देवदत्त इत्यादौ कृत्तद्धितसमासेषु संख्याभिधाना
भावेनागतेः नन्वनभिहिते कर्तृत्वे इत्यर्थोऽस्तु अस्ति च पाचक इत्यादावपि विशेषणतया कृतेरभिधानमिति चेन्न कृष्णस्य कृति
रित्यत्र कृतेरभिहितत्वेन कर्तरि षष्ठ्यनापत्तेः तंडुलः पच्यते स्वयमेवेत्यादौ तंडुलपदात्तृतीयापत्तेः तत्रापि कृतेरनभिधानात् सिद्धांते तु
कर्तुरभिहितत्वात्तत्र प्रथमा किं च धातुनैव कृतेरभिधानात् देवदत्तेन क्रियत इत्यत्र तृतीयानापत्तिः आश्रयत्वं तृतीयार्थ इति तु दु
र्वचमनुशासनाभावात् नन्वाख्यातस्याश्रयार्थत्वे बीजाभावः देवदत्तादेराधेयतया पाकादावन्वयसंभवादिति चेन्न नामार्थधात्व

र्थयोः साक्षाद्भेदान्वयस्याव्युत्पन्नत्वात अन्यथा तंदुलः पचतीत्यपि प्रयोगापत्तेः कर्मतासंबंधेन तंडुलस्य पाकेन्वयसंभवात्
किं चाख्यातस्य कर्तृवाचित्वाभावे पचति चैत्र इत्यादावनुभवसिद्धस्य सामानाधिकरण्यस्यानुपपत्तिः ततश्च पचति चैत्रइ
ति प्रयोगप्रसंगः अस्मन्मते त्वभेदान्यथाऽपपत्त्या न्यायसिद्धं समानवचनकत्वम् अथ चैत्रादिगतसंख्याभिधायित्वमेव चैत्रा-
दिसामानाधिकरण्यमिति चेदेतन्मते संख्यायाः कुत्रान्वय इत्यत्रैव नियामकाभावः अत्राहुः भावनान्वयिनि संख्यान्वयः भा
वनान्वययोग्यश्चेतरविशेषणीभूतप्रथमांतपदोपस्थाप्यः चंद्र इव मुखं निरीक्ष्यत इत्यत्रेवार्थसादृश्यस्य विशेषणे चंद्रे संख्या
न्वयवारणायेतरविशेषणेति भावना च संख्याकालातिरिक्तप्रत्ययार्थ इति अथ कथं न पचति चैत्र इत्यत्र भावना न्वयिनि
पाकानुकूलकृत्यभाववति चैत्रे संख्यान्वय इति चेन्न भावनान्वययोग्यताया एव विवक्षितत्वात् अत एव भावनान्वययोग्यश्चे
त्युक्तम् परे तु परंपरया भावनान्वयमूरीचक्रुः अत्र वदंति भावनान्वयिनि संख्यान्वये पच्यते त्यत्रेष्टसाधनत्वान्वितपाके संख्या
न्वयापत्तिः इष्टसाधनत्वाद्यतिरिक्तत्वेन विशेषणे तु तदेव गौरवम् यत्तूक्तनियमस्वीकारे लाघवमेव बीजं तथाहि भावनान्वयबोधा
याः परपदार्थे चैत्राद्युपस्थितिकल्पनमावश्यकम् तथा च तत्र संख्यान्वयस्वीकारे पदार्थांतरोपस्थित्यकल्पनं प्रत्युत लाघवम
क्षुण्णमेवेति चेन्न शाब्दिकमते भावनाया आख्यातवाच्यत्वाभावात् आख्यातार्थे आश्रये संख्यान्वयस्वीकारे पदांतराः ननु सं

वा०८ ४ धानेनलाघवात् तथाच संख्याबोधं प्रत्याख्यातजन्याश्रयोपस्थितेर्हेतुत्वं बोध्यम् एतेन युष्मदादिसमानाधिकरणे इत्यस्य
युष्मदर्थगतसंख्याभिधायिनीत्यप्यर्थोऽपास्तः संख्यान्वयस्यानिश्चयात् अतित्वं भवतीत्यत्रापि मध्यमत्वापत्तेश्च त्वच्छब्द
स्येवत्वत्कर्मकातिक्रमणकर्तरि लक्षणया युष्मदर्थ एव संख्यान्वयात् इत्यलम् आख्यातस्थले क्रियाविशेष्यकः शा
ब्दबोधः प्रथमांतविशेष्यकः शाब्दबोधो वा अत्राहुः पश्यमृगो धावतीत्यत्र प्रधानदर्शनक्रियां प्रति मृगस्य कर्मत्वात्
द्वितीयापत्तिः ननु तार्किकमते नायं दोषः वाक्यार्थस्य कर्मत्वाद्वाक्यस्य प्रातिपदिकत्वाभावेन द्वितीयाया असंभवात्॥
अतएव केयटादयोपीत्थमेव समादधुः अतएव क्रमादमुं नारद इत्यबोधि स इत्यादौ वाक्यार्थस्य कर्मत्वान्न द्वितीयेति स
मादधते॥ यत्तु तत्र निपातेनाभिहितत्वान्न द्वितीयेति तन्न अनभिधानं च तिङ्कृत्तद्धितसमासैरित्येव भाष्ये पाठादिति चेत् सत्यम्
तदेव तु भवन्मते दुर्वचम् तथा हि वैयाकरणानां मते कारकविशिष्टा क्रिया वाक्यार्थः तत्र धावतीत्यस्य प्रातिपदिकत्वाभावेन
द्वितीयेति युक्तोयं समाधिः तार्किकमते तु क्रियाविशिष्टप्रथमांतार्थस्य वाक्यार्थतया तस्य कर्मत्वं दुर्वारमेव अन्यथा पचंतं चै
त्रं पश्येत्यादावपि पाकानुकूलकृतिविशिष्टस्य चैत्रस्य कर्मतया द्वितीयानापत्तेः अतएव नीलो घटः करोतीति न प्रयोगः नच
नीलं करोति घटं करोतीति पृथगेव भाष्यरीत्या कर्मत्वात् द्वितीयेति वाच्यम् एवमपि विशिष्टस्य कर्मतामादाय प्रथमापत्तेर्दुर्वा

रत्वात् स्यादेतत् पश्यलक्ष्मणपंपायांबकः परमधार्मिक इत्यादौ बकादेः प्रातिपदिकत्वसंभवात् द्वितीयादुर्वारे
ति चेन्न तत्राप्यस्त्यादिक्रियाध्याहारेणैव बोधात् अत एव धिक् देवदत्तेत्यादौ दिधिगादियोगेपि न द्वितीया संबोधनं
क्रियायां विशेषणमिति सिद्धांतितत्वेनास्मन्मते ध्यात्वत क्रियाया एव विशेष्यत्वात् अत एव पांडुदेवदत्तो मा गायती
त्यत्र गानादेरेव कर्मत्वमनुभवसिद्धं एतेन श्रुत्वा ममैतन्माहात्म्यं तथा चोत्पत्तयः शुभा इत्यत्रोत्पत्ते रिति द्वितीयावारणा
यार्षत्वं स्वीकुर्वंतः परास्ताः तत्राप्यध्यात्वतायाः संतीत्यादिक्रियाया एव विशेष्यत्वात् अथ प्रथमांतस्य विशेष्यत्वाभा
वे सुरथो नाम राजाभूत्समस्ते क्षितिमंडले॥ तस्य पालयतः सम्यगित्यादौ तच्छब्देन सुरथपरामर्शानापतिरिति चेदेवं त
र्हि तुल्ये पराधे स्वर्भानुर्भानुमंतं चिरेण यत् हिमांशुमाशु ग्रसते तन्म्रदिम्नः स्फुटं फलमित्यादौ तच्छब्देन ग्रसनस्य परा
मर्शानापत्तिः अत एव च भावप्रधानमाख्यातमिति यास्कवचनमप्युपपद्यते न चाख्यातार्थेषु संख्याकालादिषु भाव
नायाः प्राधान्यमिति तदर्थः शंक्यः यत्रोभे भावप्रधाने भवत इति निरुक्तवचनमुपादाय यत्रोभे नामाख्याते भवतस्तत्र भा
वप्रधाने क्रियाप्रधाने इत्यर्थ इति तद्भाष्यव्याख्याया असंगतिः किंच पठन् गच्छतीतिवत्पठति गच्छती त्य पि प्रयोगाप
त्तिः॥ पाठानुकूलकृतिमांश्चैत्रो गमनानुकूलकृतिमानिति बोधसंभवात् शाब्दिकमते तु क्रिययोः परस्परमनन्वयान्नतां

वा॰सु॰ थाप्रयोगः कथं तर्हि पचति भवतीत्यत्र पाकक्रिया भवतिक्रियायाः कर्त्रीति भाष्यम् अतएव तिङंतोपस्थापि
५ ताक्रियाक्रियांतरैः समवायं न गच्छतीति उक्तं भाष्य एवेति चेत्सत्यम् कर्तृकर्मभावेन क्रिययोः परस्परमन्वयो भवति न
तु करणत्वेनेति कैयटेन व्याख्यातम् किंच धात्वर्थव्यापारप्रकारकशाब्दबोधं प्रत्याख्यातजन्योपस्थितेस्तार्किकम
तहेतुतया पुरीमवस्कंद लुनीहि नंदनं मुषाण रत्नानि हरामरांगनाः विगृह्य चक्रे नमुचिद्विषा बलीय इत्थमस्वास्थ्यमहर्निशं
दिवइत्यादौ पुर्यवस्कंदनरूपाः स्वास्थ्यक्रियेत्याद्याकारकान्वयाभावे धातुसंबंधे विहितस्य लोडादेरनापत्तिः किंच धातु
संबंधे प्रत्ययाइत्यस्य धात्वर्थानां परस्परसंबंधे सति यस्मिन्काले प्रत्यया उक्तास्ततोऽन्यत्रापि भवंतीत्यर्थः वर्तमानसामी
प्यइत्यादिना कालबाधस्यैव प्रक्रांतत्वात्काल एव बाध्यते तत्रापि गौणत्वात्कृदुपस्थाप्यस्य गौणत्वानापत्तेः उक्तकालबाध
रूपव्यवस्थाया अनुपपत्तिर्बोध्या अपि च सुवृष्टिश्चेद्भविष्यत्सुभिक्षमभविष्यदित्यादौ क्रिययोः कार्यकारणभावेना
न्वयाभावे हेतुहेतुमतोर्लृङित्यादेरप्रवृत्त्यापत्तेरिति दिक् धातूनां तु फलव्यापारोभयवाचकत्वं न तु व्यापारमात्रवाचक
त्वं न च कर्मणि द्वितीयेत्यत्र कर्मपदस्य कर्मत्वपरतया कर्मत्वं च फलमेवेति फलं द्वितीयार्थ एवेति नैयायिकनव्योक्तं शंक्यं
सकर्मकाकर्मकत्वविभागानापत्तेः फलव्यापारोभयवाचकत्वं सकर्मकत्वं केवलव्यापारवाचकत्वमकर्मकत्वमि

तितेः स्वीकारात् नचयत्धातुसमभिव्याहारे फलं व्यापारश्च प्रतीयते स धातुः सकर्मक इति तल्लक्षणमस्त्विति वाच्यं कर्मप्रयो
गे सकर्मकत्वज्ञानं सकर्मकत्वज्ञाने च कर्मप्रयोग इत्यन्योन्याश्रयापत्तेः अथायमाशयः संयोगरूपफलबोधे गमधातुस
मभिव्याहारः कारणमावश्यकश्चायं कार्यकारणभावः अन्यथा गच्छतीत्यत्र विभागानुकूलव्यापार एव कुतो न प्रतीयत इ
त्यत्र नियामकाभावात् गमधातुसमभिव्याहारस्य कारणत्वापेक्षया गमधातोः कारणत्वे एव लाघवात् अत एव पाको गमन
मित्यत्र न पर्यायता नच तत्र तत्तत्फलावच्छिन्नव्यापारे लक्षणा तात्पर्यग्राहकं विना लक्षणाया अप्यसंभवात् स्वरसत एव
तद्बोधोदयेन लक्षणाया अयुक्तत्वाच्च बोधकत्वं स्वीक्रियते वाचकत्वं नास्तीत्यस्य दुर्वचत्वाच्च किंच शाब्दबोधे वृत्त्या पदज
न्यपदार्थोपस्थितेर्हेतुतया फलविषयकशाब्दबोधं प्रति द्वितीयाजन्योपस्थितेर्हेतुत्वे गौरवम् नच धातुजन्यफलोपस्थि
तेर्हेतुत्वं कल्प्यमिति साम्यमिति वाच्यम् फलविशेषबोधे धातुविशेषसमभिव्याहारस्य नियामकत्वे न तदंशे साम्यात् अथा
श्रयमात्रं द्वितीयार्थ इति द्वितीयाजन्योपस्थितेर्हेतुत्वकल्पने साम्यमिति चेन्न ग्राममध्यास्ते। अधिशेते इत्यादिप्रयोगानुरोधेना
श्रयत्वप्रबोधं प्रति तद्धेतुत्वस्य भवतोऽप्यावश्यकत्वात् किंच व्यापारमात्रस्य धात्वर्थत्वे पच्यते तंडुलः स्वयमेवेत्यादौ कर्मवद्भा
वानापत्तिः नच धात्वर्थजन्य फलाश्रयत्वमेव कर्मवद्भावविषय इति वाच्यम् पच्यते घटः स्वयमेवेत्यस्याप्यापत्तेः धात्वर्थज

न्ययत्नजन्योत्पत्तिरूपफलस्य घटे सत्वात् अन्यथा क्रियते घटः स्वयमेवेत्यस्यापत्तेः क्रिया च व्यापारसमुदायः। तदुक्तं ह
रिणा यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते आश्रितक्रमरूपत्वात्सा क्रियेत्यभिधीयते इति एतेन धात्वर्थः क्रिया तद्वाचक
त्वं च धातुत्वमित्यन्योन्याश्रयो ऽपास्तः साध्यत्वं च क्रियांतरानुत्थापकत्वं तदेवासत्वभूतत्वं एतदेवाभिप्रेत्योक्तं हरिणा असत्व
भूतो भावश्च तिङ्पदैरभिधीयते इति व्यापाराणामनंतत्वेतितद्वादिन्यायेन बुद्धिविशेषादेरेव शक्यतावच्छेदकानां नियामकत्वात्
लकारविशेषाणां लडादीनां तु वर्तमानत्वादिकमप्यर्थः वर्तमानत्वं च प्रारब्धाऽपरिसमाप्तक्रियोपलक्षितत्वम् वर्तमानत्वादी
नां तु धात्वर्थव्यापार एवान्वयः सतत्सत्व एव पचतीत्यादि प्रयोगात् तार्किकास्तु यत्न एव वर्तमानत्वादीनामन्वयः यत्नाभावे
ऽग्निसंयोगादिरूपव्यापारसत्वेप्ययं न पचतीति प्रयोगात् वस्तुतस्तु यत्नस्यापि व्यापारविशेषत्वाददोषः किं च जानातीत्यादौ
व्यापार एव तेषां वर्तमानत्वान्वयः दृष्टेन श्यतीति प्रयोगवारणायोत्पत्तेरप्याख्यातार्थत्वं स्वीकृत्य तत्रैव वर्तमानत्वादीनामन्व
य इति दीधितिकृतापि स्वीकारादनेककार्यकारणभावप्रसंगः न च व्यापारे तदन्वये नाशस्य वर्तमानत्वान्नष्टेपि घटे नश्यतीति
प्रयोगापत्तिरिति वाच्यम् प्रतियोगित्वसहितनाशसामग्रीसमवधानस्यैव तत्र व्यापारात् तच्चेदं वर्तमानत्वादि लकारद्योत्यं वा
च्यं वेति पक्षद्वयमपि क्षोदक्षममेव कालस्य क्रियारूपतया क्रियामात्रस्य च धातुवाच्यत्वात् लकारो द्योतक एव अथवा क्रिया

गतं वर्तमानत्वादि लकारवाच्यमेवेत्यन्यत्र विस्तरः परोक्षत्वमतीतत्वमनद्यतनत्वं च लिडर्थः परोक्षत्वं च वक्तृसाक्षात्काराविष
यत्वं व्याते नेकिरणावलीमुदयन इतित्वयुक्तमेव एवं च रुसुबंधुः सुजनैकबंधुरित्यपि यत्तु णलुत्तमो वेति ज्ञापकादपरोक्षेपि लि
ड् भवतीति तन्न चित्तविक्षेपादिना स्वक्रियायाः प्रत्यक्षत्वाभावे ऽनमप्रयोगात् यथा बहु जगद पुरस्तात्तस्य मत्ता किलाहमिति
यत्तूक्तं वर्धमानेन तिङंतप्रतिरूपकोयं निपात इति तच्चिन्त्यम् तथासति धात्वर्थतावच्छेदकफलाश्रयत्वाभावेन किरणावलीमित्य
स्य कर्मत्वानापत्तेः इत्याख्यातार्थधात्वर्थनिर्णयः समासस्थले विशिष्टस्यैवार्थवत्वं घटादिपदे घकारादीनामिव तत्राप्यवय
वानां निरर्थकत्वादिति शाब्दिकाः तार्किकास्त्ववयवशक्त्यैव निर्वाहमिच्छंति तन्मते समासे वृत्तिमत्वरूपार्थवत्वाभावात्प्रातिप
दिकत्वानापत्तिः अवयवार्थमादाय समुदायस्यार्थवत्वं तु न संभवति एवमपि समुदायस्य शक्तिलक्षणयोरसंभवात् अर्थवत्वं त्वत्रसू
त्रे वृत्तिमत्वमेव अन्यथा गवित्ययमाहेत्यादावपि प्रातिपदिकत्वापत्तिः सिद्धांते तु अनुकार्यानुकरणयोरभेदविवक्षायां सादृश्याद्
द्रोशब्दादीनामुपस्थापकत्वेपि वृत्त्योपस्थापकत्वाभावान्नार्थवत्वं न च तत्र समासग्रहणात्प्रातिपदिकत्वं तथासति समासग्रहण
स्य नियमार्थत्वाभावे वाक्यस्यापि प्रातिपदिकत्वापत्तौ सुब्लुगापत्तेः मूलकेनोपदंशमित्यादौ कृद्ग्रहणपरिभाषया प्रातिपदिकत्वापत्ते
श्च राजपुरुष इत्यादौ नामार्थयोरिति नियमाद्राजाभिन्नः पुरुष इति बोधापत्तेश्च राजपदस्य राजसंबंधिनि लक्षणया राजसंबंध्य

वा॰ मु॰ भिन्नःपुरुष इव बोधाभ्युपगमे तु राज्ञीदासी इत्यत्र समानाधिकरणलक्षणापुंवद्भावापत्तिः वृत्तेः प्राक् यत्र सामानाधिकरण्यं तत्रैव पुंव
७ द्भावः इत्युक्तौ तु मृगी व चपला मृगचपले त्यादावपि पुंवद्भावानापत्तेः अत्र हि सदृशलक्षणया सामानाधिकरण्यं एवं चित्रगुरि
त्यादावपि चित्राः भिन्ना गौरिति बोधवारणाय गोपदस्य चित्रगवीस्वामिनि लक्षणा चित्रपदं तात्पर्यग्राहकमिति सिद्धांतः सोऽप्य
संगतः समानाधिकरणलक्षणपुंवद्भावानापत्तेः अनेकपदस्यैकस्मिन्नर्थे वर्तमानत्वाभावात् देवदत्तं पंडितं जानीहीत्यादावि
वं देवदत्तपंडितं जानीहीत्यादावपि पांडित्यस्य विधेयत्वापत्तेश्च अत एव पटुरहं ब्रवीमीत्यत्रास्मदो द्वयोश्चेत्यनेन प्राप्तस्य बहुव
चनस्य सविशेषणानामित्यनेन प्रतिषेधो भवति वयं ब्राह्मणा इत्यत्र तु ब्राह्मणत्वस्य विधेयत्वेन विशेषणत्वाभावान्न निषेधः
किं चावयवानामर्थवत्त्वे ऋद्धस्य राज्ञः पुरुष इत्यादाविव ऋद्धस्य राजपुरुष इत्यपि विशेषणयोगापत्तिः न च यत्र समासघटकी
भूतपदबहिर्भूतपदसापेक्षत्वमभेदेन तत्र समासोऽसाधुः अत एव शूरैः शातितपत्त्रोऽयमित्यादौ न दोष इति वाच्यं एतद्वचनारंभस्यैव
गुरुत्वात् मम तु सापेक्षमसमर्थवदिति न वाचनिकं किं तु पदार्थैकदेशत्वान्न ऋद्धादीनामन्वय इतित्यभिप्रायिकम् देवदत्तस्य
गुरुकुलमित्यादौ तु लोके बोधोदयेन व्युत्पत्तिवैचित्र्यादेकदेशेऽप्यन्वयः स्वीक्रियते एतदभिप्रायेणैवोच्यते भवति वै नित्यसापे
क्षस्य वृत्तिरित्यसमर्थमित्यस्य हि लोके बोधाजनक इत्यर्थः अथ तार्किकमतेऽपि राजपदस्य राजसंबंधिनि लक्षणाभ्युपगमेने

कदेशत्वादेव नञ्स्थादौ नामन्वय इति चेन्न कण्ठेकालोऽस्याः पुत्र इत्यादौ लक्षणायां मानाभावेन तत्र विशेषणान्वयापत्तेः किं
च यस्य राजपुरुष इत्यत्र लुप्तषष्ठ्यनुसंधानाच्छाब्दबोधस्तस्य पुरुषस्य नादृशप्रयोगापत्तेर्दुर्वारत्वात् न हि तत्र षष्ठीनानुसंधेयेति
राजशासनमस्ति अपि च वृत्तेरर्थवत्त्वाभाव पुरुषो व्याघ्र इव शूर इत्यादाविव पुरुषव्याघ्रः शूर इत्यस्य तुल्यार्थत्वापत्तेरुपमितं
व्याघ्रादिभिरित्यत्र सामान्याप्रयोग इति निषेधात्समासानापत्तेः सिद्धान्ते तु पात्तधर्मातिरिक्तधर्मेण सादृश्य ग्रहणे समासो भव
त्येव अत एव भाष्याब्धिः क्वातिगंभीर इत्यत्रापि तन्नदुरवगाहत्वादिना सादृश्यं अत एव वषट्कर्त्तुः प्रथमभक्ष इत्यत्र भक्षणमुद्दि
श्य न प्राथम्य विधिरिति मीमांसक सिद्धान्तः अत एव चद्दृशा विशेषयोः समासे सति अविमृष्टविधेयतादोषापत्तिरित्यालंकारि
काः एवं राज्ञः पुरुषः शूरश्च भवतीति वाक्ये राजसंबंधशूरत्वोभयस्य पुरुषे बोधवद्राजपुरुषः शूरश्चेत्यपि प्रयोगापत्तिः किंच
राजपुरुष इत्यादौ षष्ठ्यादिलोपपाणिपादमित्यादौ चादिलोपे च गौरवात् तस्मात्पंकजादिपदवत्समासेपि शक्तिकल्पनमुचितं
अथ राजपुरुषादेः समुदायस्य शक्तत्वे निषादस्थपतिं याजयेदित्यत्र निषादानां स्थपतिरिति न तत्पुरुषः पूर्वपदे संबंधिनि लक्ष
णाप्रसंगात् किंतु कर्मधारयो लाघवादिति सिद्धान्तासंगतिरिति चेन्न तत्पुरुषे संबंध्यादिरूपाधिकपदार्थान्तर्भावेणैकार्थीभाव
कल्पनमित्यत एव गुरुत्वात् अत एव बहुव्रीहावन्यपदार्थान्तर्भावेणैकार्थीभावः कल्पनीय इति तत्पुरुषापेक्षया तस्य जघन्यत्व

मू नञ्समासे त्वारोपितत्वस्य नञा द्योतितत्वादब्राह्मण इत्यस्यारोपितब्राह्मण इत्यर्थः ब्राह्मणभिन्न इत्यादिस्त्वार्थिकोऽर्थः अतए
वौत्सर्गिकं तत्पुरुषस्योत्तरपदार्थप्राधान्यमपि सिध्यतीत्यसर्वस्मै इत्यादौ सर्वनामत्वात्स्मायादयः ननु शाब्दिकमते नञो द्योतक
त्वादब्राह्मण इत्यादावेकार्थीभावासंभवः भिन्नार्थशब्दानामेकार्थवृत्तित्वस्यैवैकार्थीभावपदार्थत्वादिति चेन्न ब्राह्मणत्वमारो
पश्च ब्राह्मणशब्दार्थः तयोश्च परस्परं विषयविषयिभावेनान्वयः आरोपविषयब्राह्मणवानित्यर्थः इदमेव नञो द्योतक
त्वं एवं च तादृशपदार्थयोः परस्परमन्वयमात्रेणैकार्थीभावव्यवहारात् भाष्यानुसारिणस्तु नञोऽभाव एवार्थः स च प्रतियोगिनि
विशेषणं विशेष्यो वेति पक्षद्वयम् आद्ये घटो नास्तीत्यत्राभावप्रतियोगिघटकर्तृकासत्तेति बोधः अत्वं भवसीत्यत्र भेदप्रतियो
गित्वद्भिन्नाश्रयिका भवनक्रियेति बोध इति युष्मदर्थसामानाधिकरण्यसत्त्वान्मध्यमत्वादिव्यवस्था सिध्यति त्वत्प्रतियो
गिकभेदवानित्यर्थे तु तदसिद्धेः एवं न घटा वर्तन्त इत्यत्र बहुवचनमपि सिध्यति अभावपरत्वे तु तस्यैकत्वात्तदनापत्तेः एवं से
व्यतेऽनेकया सन्नतापाङ्गयानेकमन्यपदार्थे इत्यत्रोत्तरपदार्थप्रधानत्वादेकवचनं सिध्यति तपन्त्यनेके जलधेरिवोर्मय इत्यत्र
त्वनेकशब्दस्यैकशेषेण बोधः द्वितीये त्वभावविशेष्यक एव बोधः उत्तरपदकार्यं तु अनञ्समास इति ज्ञापकादित्यन्यत्र वि
स्तरः इति समासार्थनिर्णयः उपसर्गाणां द्योतकत्वमेव न वाचकत्वं अनुभूयते सुखमित्यत्र धात्वर्थतावच्छेदकफलशा

लित्वाभावेनकर्मणिलकारानापत्तेः एवंचादीनामपिद्योतकत्वम् अतएवसाक्षात्क्रियतेहरिरित्यादौहरेःसाक्षात्कारकर्मता
एतेनप्रादीनांद्योतकत्वंचादीनांवाचकत्वमित्यर्धजरतीयमपास्तम् ननुचादीनांवाचकत्वाभावेस्वीकारार्थादौमिति यदा
च्छाब्दबोधानापत्तिरितिचेन्न निपातानामेवद्योतकत्वेनान्ययांतरस्यद्योतकत्वाभावात् ननुलौकिकविषयत्वंनिपातार्थः क
रोतेश्चतदनुकूलोव्यापारोऽर्थः तथाचग्रामंगच्छतीत्यत्रद्वितीयार्थफलाश्रयत्वेनसाक्षात्क्रियतेहरिरित्यत्रापिकरोत्यर्थ
जन्यनिपातार्थफलाश्रयत्वादेवकर्मत्वमस्त्वितिवाच्यम् केवलव्यापारवाचकत्वस्यपूर्वमेवनिराकृतत्वात्। किंचनिपातानांवाचकत्वेशोभनः
समुच्चयोद्रष्टव्यइतिवच्छोभनश्चद्रष्टव्यइत्यपिप्रयोगापत्तिःघटस्य समुच्चयइतिवद्घटस्यचइतिप्रयोगापत्तिश्च ननुशोभनःसमुच्च
यइत्यादौनामार्थत्वादभेदएवशोभनश्चेत्यादौतुनिपातार्थत्वाच्छोभनवृत्तिःसमुच्चयइतिभेदान्वयएवनिपातातिरिक्तना
मार्थयोरेवाभेदस्वीकारादितिचेन्न निपातातिरिक्तत्वविशेषणप्रवेशस्यैवगुरुत्वात् अपिचशारेरुस्त्रैरिवोदीच्यानुत्थरि
ष्यन्त्रसानिवेत्यादावनन्वयः अत्रोस्त्रसदृशोःशारेरससदृशानुदीच्यानुत्थरिष्यन्नित्यर्थः सचोस्त्रादिपदानांतत्सदृशपरत्वे
इवशब्दस्यद्योतकत्वंचसंगच्छते तथाहि उस्त्रैरितिकरणतृतीया नचोस्त्रात्रकरणमिवशब्दार्थसदृशस्यकरणत्वेतु
ननुतत्रक्रियायाआवृत्त्याअस्यकरणकसकर्मकोत्थरणसदृशशारकरणकोदीच्यकर्मकोहरणमित्यर्थान्नदोषइतिवाच्यं वार द्यमिवशाब्दप्रयोगासंगतेः उपस

वा०भु र्गत्वापेक्षया निपातत्वस्याधिकवृत्तितया तदवच्छेदेन द्योतकतायाः कल्पयितुमुचितत्वाच्च सामान्ये प्रमाणानां पक्षपातात्
१ निपातत्वं चाखण्डोपाधिरूपं जातिरूपं वोभयथापि प्रादिचादिसाधारणमेव नञ्तत्पुरुषे उत्तरपदार्थप्राधान्यमिति प्रवादः
स्य पूर्वपदद्योत्ये प्रतिप्राधान्यमित्याशयः द्योत्यार्थेन चार्थवत्वात् प्रातिपदिकत्वमपि इति वाच्यार्थनिरूपणम् जातिरेव शब्दा
र्थ इति मीमांसकाः तथा हि व्यक्तीनामानन्त्यादेकव्यक्तौ शक्तिग्रहे व्यक्त्यन्तरबोधाच्च न व्यक्तौ शक्तिसंभवः जातिविशिष्टा
यां व्यक्तौ शक्तिरित्युक्तौ तु नागृहीतविशेषणा बुद्धिर्विशेष्यमुपसंक्रामतीति न्यायादावश्यकत्वाच्च जातावेव शक्तिरस्तु।
व्यक्तिबोधस्त्वाक्षेपात् न चाक्षेपितव्यक्तेः पदार्थत्वाभावाद्गामानयेत्यादौ कथं व्यक्तौ कर्मत्वाद्यन्वयः प्रत्ययानां प्रकृत्य
र्थान्वितस्वार्थबोधकत्वादिति वाच्यं लक्षणया तस्या अपि प्रकृत्यर्थत्वात् लक्षणैवत्यत्राक्षेपशब्दार्थः न चानुपपत्तिप्र
तिसंधानं विना कथं लक्षणेति वाच्यं निरूढलक्षणायां तदनपेक्षणात् ननु स्वार्थादन्येन रूपेण ज्ञाते भवति लक्षणेति नि
यमात्कथं घटत्वेनोपस्थिते लक्षणेति चेन्न एतन्नियमे मानाभावात् अत एव नीलं घटमानयेत्यादौ नीलरूपवति लक्षणे
त्याहुः नैयायिकास्तु जात्याकृतिव्यक्तयः पदार्था इत्याहुः अत्र यद्यपि एकं द्विकं त्रिकं चाथेत्यादिना बहवः पक्षाः शास्त्र
संमतास्तथापि केवलव्यक्तिरेव शब्दार्थ इति पक्षो ज्यायान् शक्तिग्राहकशिरोमणेस्तत्रैव पक्षपातात् ननु व्यक्तीनाम

वशब्दार्थत्वे आनंत्याद्व्यभिचाराच्चेति प्रागुक्तो दोष इति चेन्न जातेरुपलक्षणत्वस्वीकारात् तदुक्तं भट्टपादैः आनंत्येपि हि भा
वानामेकं कृत्वोपलक्षणं शब्दः सुकरसंबंधो न च व्यभिचरिष्यति॥ इति अन्ये वदंति व्यक्तीनामानंत्याद्गोत्वादिविशिष्टव्यक्तौ श
क्तिकल्पने गोत्वादौ शक्यतावच्छेदकत्वकल्पनस्यावश्यकतया व्यक्तिशक्तिकल्पने प्रयोजनविरहः यथा हि गोत्वांशे शक्यता
वच्छेदकता निरवच्छिन्ना तथास्मन्मते शक्तिरपि निरवच्छिन्नेति न गोत्वत्वस्यैव गौरवं अथ जातिशक्तिवादिमते पि गौर्नष्टा इत्या
दौ व्यक्तिभानस्यावश्यकतया शक्तिर्दुर्वारैवेति चेन्न व्यक्तिशक्तिज्ञानत्वेन शाब्दबोधहेतुता न स्वीक्रियत इति एतावतैव व्य
क्तेरवाच्यत्वव्यवहारात् अत एव व्यक्त्यंशे कुब्जा शक्तिरिति व्यवहारः अत एव संसर्गाणां शाब्दबोधविषयत्वेपि न वाच्यता॥
एवं च गौर्गोपदशक्य इति व्यवहारोपि न विरुध्यते अन्ये केचित् घटपदाद्घटत्वेन रूपेणोपस्थितिर्न तु द्रव्यादिरूपेणेति वैषम्यानु
पपत्तिः घटे घटत्वस्येव द्रव्यत्वादेरपि वैशिष्ट्यविशेषाभावात् तस्माद्घटत्वविशिष्ट एव शक्तिरूपेण घटत्वविशिष्ट इत्यस्य
च घटघटत्वयोरित्येवार्थः घटत्वस्योपलक्षणत्वे उक्तदोषानुद्धारात् अत्रेदं तत्त्वम् अलक्ष्यस्य लक्ष्यतावच्छेदकत्ववत् कारणस्य
च कारणतावच्छेदकत्ववत् शक्यस्य शक्यतावच्छेदकत्वे बाधकाभावाद्घटत्वादिकमुपलक्षणं अत एव दाधितो शक्यतावच्छेदके
शक्तिर्दूषितैवेत्यलम् विशेषणविभक्तेरभेदार्थत्वमित्येके साधुत्वार्थकत्वमित्यन्ये अत्रेदं बोध्यं नीलं घटं करानीत्यादौ घटपदे

श्रां०मु
१०

तरद्वितीयया कर्मत्वस्याभिहिततया नीलपदोत्तरं द्वितीया न प्राप्नोतीत्याशङ्क्य नीलं करोति घटं करोतीति पृथगेवान्वयः पश्चा
न्मानसो नीलघटयोरभेदावगम इति समाहितं तिङः कृत्तद्धितेति परिगणनं तु नाश्रयणीयमित्याशयः यदा याचितमंडनन्याये
नैकस्मिन्नेव कर्मणि घटपदादिव नीलपदादपि द्वितीयेति पक्षस्तदा साधुत्वार्थकत्वप्रवादः अत एवोक्तं भाष्ये अथवा कट एव क
र्म तत्सामानाधिकरण्याद्भीष्मादिभ्योऽपि द्वितीयेति विशेष्यसमानविभक्तिकत्वं विशेषणस्य न्याय्यमिति भावः तद्यथा ईश्व
र सुहृदः स्वयं निर्धना अपि तद्धनेन धनफलभाजस्तद्वत् भाष्ये तु पक्षांतरमप्युक्तं अथवा कटोऽपि कर्म भीष्मादयोऽपीति कट
पदोत्तरद्वितीयया कटगतकर्मत्वस्योक्तावपि भीष्मगतकर्मत्वबोधनाय भीष्मपदोत्तरमपि द्वितीयावश्यकीत्यस्मिन्पक्षे भीष्मरू
पकर्माभिन्नं कटरूपं कर्मेत्यर्थः एवं च विशेषणविभक्तेरभेदवृत्तिकल्पनं निर्मूलं पदार्थभेदे द्वंद्वः पदार्थतावच्छेदकभेदे कर्मधार
य इति तार्किकाणां प्रवादः अत्र पदार्थत्वं पदजन्यप्रतीतिविषयत्वं तच्च पदार्थतावच्छेदकसाधारणं तत्रापि प्रकारतारूपविषय
तासत्त्वात् एवं च नीलघटयोरभेद इत्यादौ पदार्थतावच्छेदकयोर्नीलत्वघटत्वयोर्भेदाद्द्वंद्वः इष्टमेव प्रमाणप्रमेयप्रयोजनेत्या
दिगोतमसूत्रेऽपि प्रमाणप्रमेययोर्भेदाभावेऽपि पदार्थतावच्छेदकयोः प्रमाणत्वप्रमेयत्वयोर्भेदाद्द्वंद्वः अथैवं द्वंद्वापवाद एकशेष इ
ति प्रवादविरोधः घटा इत्यादौ पदार्थतावच्छेदकस्यापि भेदाभावेन द्वंद्वप्राप्त्यापवादत्वासंभवात् यत्तूक्तं जगदीशेन घटा इत्या

शेव्यक्तिभेदसत्वात् द्वंद्वप्राप्त्युपपादने घटकलशावित्यत्र पदबोध्यभेदसत्वात् द्वंद्वापत्तेः नहि तत्रैकशेषः संभवति विरूपत्वादि
तितदशुध्धं विरूपाणामपि समानार्थानामिति वार्तिकेन तत्राप्येकशेषस्य दुर्वारत्वात् यत्तु तार्किकैकदेशिनः एकशेषः कृतद्वंद्वाना
मेवान्यथाश्रूयमाणपदोत्तरमेकवचनप्रसंगादिति तन्न। कृतद्वंद्वानामेकशेषकरेण कराइत्यत्र द्वंद्व एव प्राणितूर्यसेनांगानामित्येकवद्भावापत्तेरि
ति चेदत्राहुः पदार्थशब्दः पदजन्यप्रतीतिविषयपरः घटे विशेष्यता घटत्वे च प्रकारता रूपा सेति घटाइत्यादौ नीलघटयोरभेदइ
त्यादौ च पदार्थभेदसत्वात् यत्तु पदार्थतावच्छेदकभेद एव द्वंद्वः एकशेषेपि हरयइत्यादावेव अपवादत्वप्रवादोपि तत्रैव द्वंद्वप्राप्ते
ति तन्न घटोयं घटोयमिति प्रयोगवत् व्यक्तिमात्रविवक्षायां घटघटावित्यस्यापि प्राप्त्या तत्राप्येकशेषस्यावश्यकत्वात् एतेनावि
शिष्य एवैकशेषः एकघटशब्दादेव बहुवचनेनानेकघटबोधसंभवात् सकृदुच्चरितः सकृदर्थं गमयतीति न्यायस्याप्रामाणिक
त्वात् हरयइत्यादावपि सति तात्पर्ये युगपदनेकबोधेइष्टापत्तिरेवेति परास्तम् हरिहरौ इत्यादि द्वंद्ववारणायैकशेषस्यावश्यक
त्वात् किंच पदार्थतावच्छेदकभेदस्यैव नियामकत्वे एकस्मिन्नपि पुंसि दंडिकुंडलिनौ गच्छत इति प्रयोगापत्तिः पदार्थतावच्छेद
कस्य दंडकुंडलादेर्भेदसत्वात् न च हित्वानन्वयः शंक्यः नीलघटयोरभेदइत्यादाविव पदार्थतावच्छेदके तदन्वयसंभवात्॥
दीधितिकृदनुयायिनस्तु एकपदार्थे परपदार्थाभेदतात्पर्यसमासकत्वं कर्मधारयत्वं भेदतात्पर्यकत्वं द्वंद्वत्वमित्याहुः शाब्दि

कमते तु शब्दस्वरूपस्यापि शाब्दबोधे विशेषणतया भानान्नीलघटयोरित्यत्र नीलपदोपस्थाप्यघटपदोपस्थाप्ययोरित्यर्थः तत्र
विशेषणीभूतशब्दस्वरूपभेदात्पदार्थभेदादेव द्वंद्वः अतएव चासुरा दैत्या दैतेया दनुजेंद्रारिदानवा इत्यत्र विरूपाणामपि समाना
र्थानामित्येकशेषो न भवति समानप्रवृत्तिनिमित्तकस्यैव समानार्थत्वात् संज्ञाशब्दे द्रव्यस्यैव प्रवृत्तिनिमित्तत्वात्। एवं चेंद्रपद
वदभिन्नो मघवत्ववानिति बोधः ध्वनीनां सर्वत्रानित्यत्वात्तदभिव्यंग्यः स्फोट इवार्थवानिति सिद्धांतः तार्किकास्तु श्रूयमाण
पदानामेव वाचकत्वमिच्छंति यत्तु इदं पदमत्र शक्तमित्यर्थात्कोशे पदमेव पदार्थ इति तन्न। नामार्थयोरभेद इति न्यायविरो
धापत्तेः नन्वेकैकवर्णानां वाचकत्वे घकारमात्रश्रवणेपि घटबोधापत्तिः समुदायस्तु तेषामसंभवी वर्णानामाशुविनाशि
त्वादिति चेन्न तत्तद्वर्णानुभवजनितसंस्कारैस्तावद्वर्णगोचरायाः समूहालंबनात्मकैकस्मृतेः स्वीकारात् अत्रेदं चिंतनीयम् च
रमवर्णानुभवकाले तन्नाशानंतरं वा पूर्ववर्णस्मरणं कल्प्यते नाद्यः ज्ञानद्वययोगपद्यस्यनैरस्वीकारात् न द्वितीयः उद्बोधका
भावात् ननु पूर्ववर्णानुभवजनितसंस्कारसहितचरमवर्णानुभव एव तावद्वर्णस्मरणहेतुरिति चेन्न संस्कारानुभवस्मरणा
नां समानविषयकत्वेन कार्यकारणभावात् एतेन तावद्वर्णसंस्कारैः समूहालंबनात्मकमेकं स्मरणमुत्पद्यत इत्यपास्तम् उद्बो
धकाभावात् किंच समूहालंबनस्वीकारे घकारष्टकारो मकार इत्यतो घटमित्यस्य वैलक्षण्यानापत्तेः सरो रस इत्यनयोर्वैलक्ष

ण्यानापत्तेश्च नत्वेकस्मरणविषयाणां वर्णानां पौर्वापर्यसंभवः अथयेन क्रमेणानुभूतास्तेनैव क्रमेण स्मृत्यारूढाः शाब्दबोधं
जनयंतीति चेन्न क्रमेणानुभूतानामपि व्युत्क्रमेण श्लोकादौ स्मरणदर्शनात् यत्तु वर्णानां प्रत्येकं स्फोटव्यंजकत्वं मिलितानां
वेति शाब्दिकमतेपि प्रागुक्तविकल्पाद्दोष इति तन्न घकारादिभिर्वर्णैरवयवव्यंजनद्वारा समुदायाभिव्यक्तेः यदपि गृहीतसंके
तानां वर्णानां स्फोटव्यंजकत्वमगृहीतसंकेतानां वा आद्येनैरेव सिद्धौ किं तेन द्वितीये तु सर्वस्यापि नद्बोधापत्तिरिति तन्न अगृही
तसंकेतैरपि व्यंजनात् अतएवागृहीतार्थकेष्वेकं पदमिति व्यवहारः तस्मात्समूहालंबनव्यावृत्त एकं पदमित्यनुभवसाक्षिक आ
नुपूर्वीविशेषविशिष्टः कश्चिदवश्यं शाब्दपदार्थः स्वीकार्यः सएव शाब्दिकानां स्फोटः अतएव घटादीनामतिरिक्तव्यंजकत्वं न तु त्रस
रेणुपुंजात्मकत्वं विशकलितेषु तेष्वपि घट इति बुध्यापत्तेरिति वैशेषिकाः यत्तु एकं पदमित्यर्थोनुभवोऽर्थैकत्वनिबंधन इति तन्न
अर्थबोधाभावेपि पदत्वग्रहात् तदेव पदमिति बुद्धेस्तज्जातीयविषयत्वे तज्जातीयं पदमिति व्यवहारापत्तेश्च किं च हरेव विष्णो
वेत्यादावेकादेशे कृते पदविभागासंभवेन समुदायशक्तिरावश्यकी किं चोच्चारणभेदाद्भिन्नेषु व्यक्तिवाद इव शक्त्यनापत्तेः
आनंत्यादिदोषात् अपि चानुपूर्वीविशेषविशिष्टस्यैव पदत्वेन समूहालंबने पदत्वानुभवो दुर्घटः यत्तु पूर्ववर्णध्वंसविशिष्ट
चरमवर्णानुभव एवानुपूर्वीति तन्न। यत्र घकारमुच्चार्य प्रहरानंतरं टकार उच्चारितस्तत्रापि पूर्ववर्णध्वंसे सत्त्वेनातिव्याप्तेः॥

व्दाः सर्वार्थाभिधाने समर्था ईश्वरसंकेतस्तु प्रकाशक इति अतएवोक्तं न्यायवाचस्पत्ये सर्गादिभुवां महर्षिदेवताना
०मु० मीश्वरेण साक्षात्कृतः संकेतस्तद्व्यवहारादस्मदादीनामपि सुग्रहः संकेत इति सर्वेषामर्थानां सर्वशब्दैः संबंधश्च योगिप्र
१३ त्यक्षगम्य एव तेषामुभयरूपता परप्रत्ययात्तात् अतएवोक्तं हरिणा व्यवहाराय नियमः संज्ञायाः संज्ञिनि क्वचिदिति क्वचि
त्संज्ञिनि संज्ञाया नियमो व्यवहारायेत्यर्थः यथास्मदीयशास्त्रे वृद्धिशब्देनादैच एव ग्राह्या इति पुरुषव्यापारात्प्रागवाचक
स्य पुरुषव्यापारेण वाचकता कर्तुं न शक्यते शब्दार्थसंबंधस्य नित्यत्वादिति तदाशयः अतएव घटपदस्य घटे संकेते सति तद
र्थबोधो भवत्येव ननु व्यवहाराय नियम इत्ययुक्तं वृद्धिरादैजित्यादिसूत्राणां संकेतप्रकाशकत्वेन विधित्वस्यैव व्याख्य
न्वादिति चेत्सत्यं यथा विद्यमाने एव घटे नीलो घट इति नीलसंबंधः पुरुषेण बाध्यते न तु तत्र नीलादियोगः क्रीयते न तत्त्व
नील एव न पीत इति नियमः फलति तदुक्तं हरिणा वृद्ध्यादीनां च शास्त्रेस्मिन् शक्त्यवच्छेदलक्षणः अकृत्रिमोभिसंबंधो
विशेषणविशेष्यवदिति शक्त्यवच्छेदः शक्तिसंकोचः विशेषणविशेष्यवदित्यस्यार्थ उक्त एव अतएव तत्र वाचक
ताबोधनेपि तदनुत्पादनान्न शब्दार्थसंबंधस्यानित्यत्वं पाणिन्यादिसंकेतग्राह्यत्वात्संज्ञानामनित्यत्वप्रवादः वृ
द्धिशब्दस्यादैक्ष्वेव प्रयोगस्त्वत्र पाणिनीच्छाया एव नियामकत्वाच्च यदृच्छाशब्दत्वव्यवहारः अतएव स्वेच्छया संज्ञाः

क्रीयंते इत्यपिप्रवादः गौणमुख्यव्यवहारस्तुप्रसिध्यप्रसिध्धिनिबंधनएव अतएवोक्तं हरिणा सर्वशक्तेस्तुतस्यैवश
ब्दस्यानेकधर्मणः प्रसिध्धिभेदाद्गौणत्वंमुख्यत्वंचोपचर्यतइति गौणमुख्यार्थबोधकः शब्दएवप्रकरणादिरूपनिमित्ता
भावाच्चनसर्वस्ययुगपत्प्रकाशनम् सर्वशक्तेरित्यस्यव्याख्यानमनेकधर्मणइति गोशब्दस्यगोत्वजातौप्रसिध्यामु
ख्यत्वंवाहीकेत्वप्रसिध्यागौणत्वमित्यर्थः। शक्तिर्नामशब्दार्थयोस्तादात्म्यमेव अतएवपुरोवर्तिपदार्थंदृष्ट्वावाचकजि
ज्ञासयाकोयमितिप्रश्नेदेवदत्तोयमित्युत्तरं अतएवोक्तंपातंजलभाष्ये संकेतस्तुपदपदार्थयोरितरेतराध्यासरूपः स्
मृत्यात्मकोयोयंशब्दः सोर्थोयोर्थः सशब्दइति इतरेतराध्यासः परस्परात्मिकतारोपः अन्यस्मिन्नन्यधर्मावभासो
ऽध्यासः स्मृत्यात्मकइत्यनेनज्ञातएवसंकेतः शक्तिबोधकइतिसूचितम् कःशब्दः कोर्थइतिप्रश्नेघटइत्ययंशब्दो
घटइत्ययमर्थइतिसामानाधिकरण्योत्तरदर्शनाच्छब्दार्थयोरध्याससिध्धिः अतएवरामेतिद्व्यक्षरंनाममानभंगःपिनाकिनइ
त्यादौशब्दार्थयोरप्यभेदेनव्यवहारः ओमित्येकाक्षरंब्रह्मेत्यादिश्रुत्यादावपिअभेदेनैवनिर्देशः अभेदस्याध्यस्तत्वाच्चभे
दव्यवहारोपि अस्यार्थस्यायंवाचकइति अतएवोक्तं हरिणा तादात्म्यमुपन्यस्येवशब्दार्थस्यप्रकाशका इति अत्रैवशब्दे
नतादात्म्यस्यातात्विकत्वंसूचितम् यत्तुशब्दशब्दार्थयोरभेदे अग्न्यादिशब्दैर्मुखदाहापत्तिरितितन्न उक्तयुक्त्यातादात्म्य

स्यारोपितत्वेन दाहकत्वादिशक्तेरभावात् लक्षणायावृत्त्यंतरत्वमयुक्तं बोधकता रूपायाभगवदिच्छायावाशक्तेर्लाक्षणिके
१०सु ष्यविशिष्टत्वात् शाब्दबोधेवृत्त्यापदजन्यपदार्थोपस्थितिःकारणं तत्रवृत्तित्वस्यशक्तिलक्षणावच्छेदकत्वेगौरवाच्च ननुगं
१४ गापदस्यगंगातीरेशक्तिस्वीकारे स्वारसिकप्रयोगापत्तिरितिचेन्न तत्रगंगापदस्याप्रसिद्धत्वात् अतएवहरिपदस्यक्लीबा
दिवाचकत्वाविशेषेपिनझटितितेषांप्रत्ययः अतएवहनधातोर्गतौशक्तावप्यपिनस्वारसिकःप्रयोगइतिदिक् घटकर्मत्व
न मानयँकृतिरित्यादौपदार्थोपस्थित्यादिसत्वादन्वयबोधापत्तिवारणायाकांक्षाहेतुः यस्यपदस्ययत्पदव्यतिरेकप्रयुक्तान्वया
ननुभावकत्वंतत्पदेतत्पदवत्त्वमाकांक्षा ननुनीलपदंविनापिघटमानयेत्यादावन्वयदर्शनान्नीलघटयोराकांक्षासिध्येभेदबो
धाभावेसमानविभक्तिकपदांतराभावएवप्रयोजकोवाच्यः तथाचघटकर्मत्वमितिनिराकांक्षत्वेतिव्याप्तिरितिचेन्न तत्रा
कांक्षासत्वेपियोग्यताविरहेणशाब्दबोधाभावात् एकपदार्थेःपरपदार्थसंबंधोयोग्यता वन्हिनासिंचतीत्यादावयोग्य
त्वान्नदोषः ननुएकेत्यादिपदविशेषणंवापदार्थविशेषणंवा आद्यएकधातुपदोपस्थाप्ययोःफलव्यापारयोःपरस्परमन्वय
बोधानापत्तिः द्वितीयेतुप्रमेयत्वेप्रमेयत्वमित्यादौपदार्थभेदाभावादव्याप्तिरितिचेन्न पदार्थेपदार्थसंसर्गस्यविवक्षितत्वात्।।
अव्यवधानेनोपस्थितिरासत्तिः तेनगिरिर्भुक्तमग्निमान्देवदत्तेनेत्यादौनबोधः ननुपदजन्यसमूहालंबनेसकलपदार्थोपस्थि

तिसत्वाःदासत्तिरस्त्येव अन्यथाकाव्यादावन्वयवाक्याच्छाब्दबोधानापत्तिरिति चेत्सत्यम् अव्यवहितपदार्थोपस्थित्यनुकूल
व्यापारएवासत्तिः एकपदानंतरमपरपदेक्वचिदुच्चारणंक्वचित्सनीतीच्छैव व्यापारः श्लोकादौपदतात्पर्यप्रदर्शनायैवयोजनाशा
क्यम् शुकवाक्येपिशिक्षकस्यैवव्यापारः कारकत्वंनामक्रियान्वितकर्तृत्वकर्मत्वादिषट्कान्यतमान्वयित्वं दुह धातोर्विभागा
नुकूलव्यापारोर्थइतिविभागरूपफलाश्रयत्वाद्गोःकर्मतेतितार्किकास्तन्न फलद्वयार्थत्वेगोःपयोदुग्धेइतिपंचम्यनापत्तेः नचा
पादानत्वविवक्षयासेतिवाच्यं तथासतिग्रामान्त्यजतीत्यस्याप्यापत्तेःक्रियान्वितेतिविशेषणस्याप्यर्थत्वाविषयादपि
क्रियान्वितविभक्त्यर्थान्वयित्वंकारकत्वमितितदपिनवर्षासुभवतिवर्षाभूरित्यत्रविभक्त्यभावेनकारकत्वानापत्तौयणनापत्तेः
तन्मतेलक्षणाभ्युपगमेनविभक्त्यनुसंधानस्याप्यभावात् अनुसंधानेवानटश्रुतमित्यादौकारकत्वापत्तौकारकाद्दत्तश्रुतयोरि
त्युदात्तत्वापत्तिः एतेनफलाश्रयत्वंकर्मत्वमित्यपास्तम् गांदोग्धीत्यत्राव्याप्तेरित्यलम् अनादित्वमनपभ्रष्टत्वमभ्युदययोग्य
त्वंवासाधुत्वम् बोधकत्वंतत्त्वमित्युक्तौगाव्यादावतिव्याप्तेः शक्तत्वंतत्त्वमित्युक्तौविकरणानामसाधुतापत्तेः टिघुभादिसंज्ञा
सुअभ्युदययोग्यत्वाभावेपिअनपभ्रष्टत्वादेवसाधुत्वम् देशभाषयाक्रियमाणानांकूचींमचीत्यादीनामसाधुत्वमेव आ
धुनिकनाम्नांसंकल्पादौप्रयोगस्तुभांत्येवकृतंकुर्यादित्यादिनियमात् असाधुशब्दानांत्वानंत्यान्नशक्तत्वम् अर्थबोध

त्सुसाधुस्मरणद्वाराः व्युत्पन्नानां तु शक्तिभ्रमाद्बोधः अन्ये त्वाहुः बोधकतारूपा शक्तिरपभ्रंशेष्वपि दुर्वारैव ॥ ॥ इति श्रीमद्देवीदत्तात्मजरामसेवकतनूजदेवकृष्णाचार्यकृतौ वादसुधाकरः समाप्तिमियात् ॥ श्रीशंकरप्रसन्नोस्तु ॥ शुभं भवतु ॥ वाराणसीप्रमादस्य नियोगेन तु यत्नतः ॥ काशीसंस्कृतमुद्रायामङ्कितेयं विचक्षणे ॥१॥ काश्यां त्रिपुरभैरवीसन्निधौ श्री ३ युत बाबू माहब बाबू फतहनारायणसिंहजीत्यभिधायुजो निकेतने काशीसंस्कृतमुद्रायन्त्रेऽङ्कितम् ॥ सम्वत् १९२३ ॥ ॥

| अशुद्धम् | शुद्धम् |
|---|---|
| पत्र ९ | त्वेन तु |
| पङ्क्ति ८ | |
| त्वेतु नन्तु | |

